# ध्वनिकल्लोलिनी

( १ )

ध्वन्यालोक-प्रथमोद्योत-सहिता

## ध्वनिसिद्धिः

( २ )

व्यक्तिविवेक-प्रथमविमर्श सहितं

## ध्वनिखण्डनम्

च

प्रणेता—भाषान्तरकर्ता च

आचार्य आनन्द झा

प्रकाशकः—
कामेश्वरसिंह-दरभंगा-संस्कृत-विश्वविद्यालयः
दरभंगा।

प्रकाशनवर्षम्—१९७८ ई०

प्रथम-संस्करणम्— ११००

मूल्यम्—२५) रु०

मुद्रकः—
श्री भूपेन्द्र झा
मिथिला प्रेस, दरभंगा।



डा० रामकरण शर्मा
कुलपति
कामेश्वर सिंह दरभंगा संस्कृत विश्वविद्यालय
कामेश्वरनगर, दरभंगा ( बिहार )



## उद्गारः

आन्वीक्षिक्यामलङ्कारशास्त्रे काव्ये च कृतभूरिपरिश्रमाणां प्रथितयशसां पण्डितप्रकाण्डानां नैकभाषासाहित्य-सर्जनसदानन्दानां झोपाह्वानां श्रीमतामानन्दशर्मणां ध्वनिकल्लोलिनीं गुणिनामानन्दाय पुरस्कुर्वन्नमन्दमानन्दं विन्दन्नहं वर्त्ते ।

ध्वनिसिद्धान्तस्य सर्वे पक्षा अत्र शुक्लतरीकृता विद्वत्तल्लजानन्दमहिम्नेति परमामुपयोगितां भजते ग्रन्थरत्नमिदमुपादेयं सर्वेषां विदुषां छात्राणां चेति निर्विवादमेतत् ।

कल्लोलिनीयं कल्पतां कल्याणाय गीर्वाणवाणीप्रणयिनां पावनावगाहनाय परमानन्दाय च जिज्ञासूनामित्याशास्ते—

विदुषां वशंवदः
रामकरण शर्मा

# प्राक्कथनम्

मन्ये नाविदितमेतदत्यन्तं विशिष्टानां संस्कृत-साहित्यसेविनां मनीषिणां यत् सुबहोः कालादागच्छन्त्यौ विचारधारे द्वे विराजेतेतरामपारेऽप्रमहति तावत् काव्यसंसारतत्त्वरत्नविवेचनपारावारे, यत्रैका सा कथ्यते ध्वनि-काव्यमान्यत्वख्यापकतया ध्वनिधाराऽपरा च निगद्यते तद्विरोधितया ध्वन्यभावधारेति। द्वयोर्धारयोस्तयो र्मध्ये प्रथमायास्सुमहान् पोषकोऽभूत्तत्रभवानानन्दवर्धनाचार्यो द्वितीयायाश्च महाविद्वान् महिमभट्टः। काव्येषु मध्ये सर्वोत्तमतया निर्विवादयस्य ध्वनेः स्थापनायानन्दवर्धनाचार्येण विरचितश्चेद्ध्वन्यालोकनामाऽपूर्वोग्रंथस्तर्हि तत्परवर्त्तिना विद्वद्वरेण ध्वनिबाधनाय विनिर्मितः खलु व्यक्तिविवेकाख्यस्तदनुरूपस्तु महान् ग्रन्थः। ग्रन्थरत्नयोरप्येतयोः तद्रचयित्रोरिव कियन्महत्त्वं कियत्काठिन्यं कियच्चोपादेयत्वं तज्जानन्त्येव महान्तो विपश्चितस्संस्कृत-साहित्यमहाकान्तर सञ्चार-चतुराः केचन। तदिदानीन्तना अपि सरलमतयोऽध्येतारो भवन्तु सुपरिचिता धारयोरनयोः परस्परविरोधिन्यो स्सहैवेति विरचिता मया ध्वन्यालोक-प्रथमोद्योतश्लोकवार्तिकतामुपादधती ध्वनिसिद्धिरा-रचितञ्च व्यक्तिविवेक - प्रथमविमर्शश्लोकवार्तिकतामुपादधद् ध्वनि-खण्डनम् ययोः संहितारूपतां दधाना समुपस्थाप्यते ननु ध्वनिकल्लो-लिनीयं ध्वनिसाहस्रीत्यपरामपि संज्ञामादधना पुरतस्तावत्सहृदय-धुरीणानाम्।

ध्वन्यालोकं विरचय्य विदुषां महान्तमुपकारं कृतवतामाचार्यश्रीमदानन्दवर्धनानां, व्यक्तिविवेकं निर्माय तेषां महतीमुपकृतिं विहितवतां श्रीमताम्महिमभट्टमहाभागानां च परिचयश्चेदपक्षितोलौकिकस्तर्हि संक्षिप्ततया तावदिदमवगन्तव्यम् यत् एतावुभावपिविद्वत्तल्लजौ बभूवतुः काश्मीरजौ। राजतरङ्गिण्यां तत्कर्त्रा विद्वद्वरेण कल्हणेनानन्दवर्धनाचार्य-विषये खल्वेवं प्रशस्तिरुल्लिखिता प्राप्यते यत्—

मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः॥

इति। तदनुसारं ८५५-८८३ ऐशवीयवर्षेऽवश्यमासीदाचार्यं आनन्दवर्धनः। यतोहि वैदेशिकानामितिहासविदामनेकेषां मते स एव राज्ञोवन्तिवर्मणः काश्मीरशासकस्य राज्यकालः। अनेकेषामन्येषामितिहास-विवेचकानां मतेऽवन्तिवर्मपुत्रस्य काश्मीरशासकस्य शङ्करवर्मणोऽपि राजसभाया-मासीदाचार्योऽसौ सम्मानितः कवितया येन राज्ञा कारागारे निःक्षिप्तो-जात आसीत्तत्रैव न्यायमञ्जरी-रचयिता महानैयायिको जयन्तभट्टस्त-द्राजमन्त्री। मन्ये नन्वाचार्यमानन्दवर्धनमेव कविवरमभिलक्ष्य प्रोक्तं न्यायमञ्जर्यां तत्प्रणेत्रा भट्टजयन्तेन ध्वन्यस्वीकार-प्रसङ्गे—

अथवा नेदृशी चर्चा कविभिस्सह शोभते।
विद्वांसोऽपि विमुह्यन्ति वाक्यार्थगहनेऽध्वनि॥

इति। नैतावदेव, पण्डितराजजगन्नाथेनाप्येतदाचार्यविषये रसगङ्गाधरे-स्वीये "ध्वनिकृतामालङ्कारिकसरणि - व्यवस्थापकत्वा"दितिलिखता-व्यवस्थापितं व्यवस्थापकत्वमालङ्कारिकसरणे रस्याचार्यवर्यस्यस्य। कविविद्वत्प्रवरस्याचार्यस्यानन्दवर्धनस्य पितुर्नामासो"न्नोण" इतीति तस्यैव स्तुतिरत्नस्य देवीशतकस्यान्ते तदुल्लिखितेन श्लोकेनानेन निम्न-लिखितेनावगम्यते यत्—

देव्या स्वप्नोद्गमाऽऽदिष्टदेवीशतकसंज्ञया।
देशिता-नुपमामाधादतो "नोण"सुतो नुतिम्॥

इति। ध्वन्यालोकातिरिक्तं "देवीशतकं" "विषमबाणलीला" "अर्जुन-चरित" मिति काव्यग्रन्थरत्नत्रयमपि समुपलभ्यते तत्कृतम्। नैतदधिका काचन तज्जीवनवृत्तविषयिणी सूचना समुपलभ्यते तादाचार्यानन्दवर्धन-विषयिणी महत्त्वपूर्णा। तत्प्रशंसा तु राजशेखराप्येवमस्ति विहिता यत्—

ध्वनिनातिगभीरेण काव्यतत्त्व-निवेशिना।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः॥ इति

व्यक्तिविवेक-प्रणेतॄणां महाविदुषां महिमभट्टानां विषये विवेचकैरेव मुच्यते यदसौ १०५०—११०० ऐशवीय वर्षेष्ववश्यं काश्मीरभुवमलङ्कु-र्वन्नासीत्। तदीय-व्यक्तिविवेक-ग्रन्थान्त-लेखात् सुस्पष्ट मिदं लक्ष्यते यद्विदुषस्तस्य पितुर्नामासीद्"धैर्यं" इति गुरोश्च श्यामलेति। श्यामलस्य

किञ्चिन्महाकाव्यमिदानीं नोपलभ्यते किन्त्वासीत्तत्किमपीति शक्यते कल्पयितुं व्यक्तिविवेक-लेखात् । तथाहि तल्लेखः—

श्रीधैर्यस्याङ्ग-भुवा महाकवेः श्यामलस्य शिष्येण ।
व्यक्तिविवेको विदधे राजानक - महिमकेनायम् ॥

श्लोकेनानेनैतप्युवगम्यते यन्महिमभट्टो सौ राजनकेतिवांशिकोपाधि समुल्लसित आसीदिति । व्यक्तिविवेकस्य रचना तेन स्वनप्तॄणां गुण-वद्भीमपुत्राणां योगक्षेमभोजानां कृतेकृतेत्यपि व्यक्तिविवेकग्रन्थान्तलेखा-देवास्मादवगम्यते यत्—

आधातुं व्युत्पत्तिं नप्तॄणां क्षेम-योग-भोजानाम् ।
सत्सुप्रथितनयानां भीमस्यामितगुणस्य तनयानाम् ॥

इति । अत्र नप्तृपदं पौत्रवाचकमित्येकं मत मपरन्तु दौहित्रवाचक-मिति । ब्राह्मणस्यामितगुणवत्त्वमपि नैकविद्यावत्त्वरूपमेव तात्पर्य-विषयं भवितु मर्हतीतिमहिमभट्टस्य पुत्रः पौत्राश्च सर्वे प्रकृष्टपाण्डित्य-शालिन आसन्निति लभ्यत इत्यहो तस्य भाग्यवत्ता । व्यक्तिविवेककृतो, महिमभट्टस्य तदीयस्य व्यक्तिविवेकग्रन्थस्य च महिमा दार्शनिकचक्रचूमा-मणेर्महाकवेः श्रीहर्षस्य खण्डनखण्डखाद्यगतात्पद्यादस्मात् साधु शक्यते समवगन्तुं यत्—

दोषं व्यक्तिविवेकेऽमुं कविलोकविलोचने ।
काव्यमीमांसिषु प्राप्तर्महिमा महिमाऽऽदत ॥

इति । व्यक्तिविवेकातिरिक्तः तत्त्वोक्तिकोशनामकोऽपि कश्चिद् ग्रन्थ आसीत्तेन रचित इति समवगम्यते व्यक्तिविवेकीय-द्वितीय-विमर्श वाक्यादस्मात् यत्--

( रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः ।
क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः ॥
सा हि चक्षुर्भगवतस्तृतीयमिति गीयते ।
येन साक्षात्करोत्येष भावांस्त्रैलोक्यवर्त्तिनः ॥ )
इत्यादि प्रतिभातत्त्वमस्माभिरुपपादितम् ।
शास्त्रे तत्त्वोक्तिकोशाख्य इति नेह प्रपञ्चितम् ॥

इति । ध्वनिविरोध्याचार्यपरम्पराप्यस्तिसुदीर्घा यतोहि मुकुलभट्ट-प्रतोहारेन्दुराज-भट्टनायक-प्रभृतयोपि ध्वनिविरोधिन एव कथ्यन्ते, परन्तु भट्टमहिम्नो विद्यते किमप्यन्यद्वैशिष्टचम् । विश्वसिमि मुद्रितयाऽनया-कल्लोलिन्या स्यादेव ज्ञानवृद्धिर्महती जिज्ञासूनाम् । यतो हि सहिन्दी-रूपान्तरस्यालोक-प्रथमोद्योतस्य विवेक - प्रथमविमर्शस्यचात्रयोजनेनैकै-कस्य विषयस्योपरि भविष्यति षड्धा प्रकाशपातः । यथा मूलकारिकया एकः, स्वोपज्ञवृत्त्या द्वितीयः, द्वयोर्हिन्दीरूपान्तरभ्यां द्वौ, कल्लोलिनीतद्-हिन्दीरूपान्तराभ्यामपि च द्वाविति । अस्तु । प्रकृताया ध्वनिकल्लो-लिन्या अस्याः प्रकाशनं कामेश्वरसिंह-दरभंगा-संस्कृत-विश्वविद्यालये-नानेन विधीयत इति नितरां प्रमोदावहम् । यत्सुदृष्टिसुफलमेतत्प्रकाशनं तस्मै प्रख्यातवैदुष्याय प्रकृतस्य संस्कृतविश्वविद्यालयस्य यशस्विने कुलपतये डा० श्रीमद्रामकरणशर्ममहाभागाय, विद्वद्भ्यां भूतवर्तमा-नाभ्यां कुलसचिवाभ्यां च डा० सच्चिदानन्दचौधरि, डा० महेन्द्र-ठक्कुराभ्यां साशीर्वादं वितराम्यमितान् धन्यवादान् । तेऽपि स्मर्यन्ते मया स्वशिष्याः डा० दयाशङ्कर एम. ए. पी. एच. डी., झोपाह्व बिनोदचन्द्र–पवनकुमारा यै र्ध्वन्यालोक-प्रथमोद्योतस्य व्यक्ति-विवेक-प्रथम-विमर्शस्य च प्रतिलिपिः सम्पादिता तावन्मुद्रणोपयोगिनी ।

ततः परं दरभंगास्थ "मिथिला"मुद्रणालयाधिपः कविसुहृत्प्रवरः श्रीसुरेन्द्रझा-'सुमन' साहित्याचार्य एम. पी. महोदयोऽपि श्रीरामनारायणझाऽक्षरसंयोजक-सहितोऽवश्यमेव साधुवादार्हो येन विहितमस्ति मुद्रणसाहाय्यम् । यद्यपि सत्यमिदं यन्मुद्रणानुकूला यादृशी साध्वी यान्त्रिकी परिस्थितिरस्ति वाराण-स्यादौ न तादृश्यस्ति साऽत्र दरभंगायाम् तथापि जातं तद्यथातथेति क्षन्तव्या मुद्रणदोषाः सत्यामपि सावधानतायामवशिष्टाः केचनेत्यलमिदानीमिति साञ्जलिबन्धं निवेदयन्नस्म्यहम्——

भवदीयः—

**आनन्दझा**

कल्लोलिनी-प्रणेता

# ध्वनिसिद्धि-संक्षिप्त-विषय-सूची

★

# ध्वनिखण्डन-संक्षिप्त-विषय-सूची

★

ध्वनिकल्लोलिनी

# ध्वनिसिद्धिः

## ( ध्वन्यालोक - प्रथमोद्योत - वार्त्तिकम् )

चरण - प्रणताऽशेष - हृदाऽऽवरणवारिणी ।
उदेतु हृदये काऽपि सवीणा करुणा मम ।।

यदीय - वदनस्फुरद्ध्वनिशाकर - प्रोज्ज्वला-
मुपास्य सुरभारतीमहमभूवमेतादृशः ।
तदीयचरणाऽरुणाम्बुज-पराग-पुञ्जे कथं
न मत्प्रणतिसन्तति भ्रंगर-भामिनो वोल्लसेत् ।।

स्वेच्छासिंहस्य नखाः, कान्त्या खिन्नीकृतेन्दवो नितराम् ।
त्रायन्तां वो नित्यं, मधुमथनस्य प्रपन्नदुःखभिदः ॥१॥
ध्वन्यालोककृतेदं, मंगलपद्येन विशदयता ।
ध्वनितमिदं यत्कर्त्रा विघ्नविघाताय मंगलं कार्यम् ॥२॥
स्वेच्छेत्युक्त्या ध्वनितं नैतत्सिंहत्वमदृष्टकृतम् ।
नो वा परेच्छयाप्तं मधुमथनेच्छा यतः सकल हेतुः ॥३॥
एतेन व्यतिरेकः सिंहस्यास्यान्य-सिंहतो ध्वनितः ।
साभिप्रायविशेषणतया ,ततः परिकरः स्फुटितः ॥४॥
स्वाच्छयं छायायां ननु विशेषणीकृत्य साध्विदं ध्वनितम् ।
प्रकृता छाया नातपविरहः किं वा तमोऽपि नह्यत्र ॥५॥
सिंहत्वं मधुमथने प्रतिपाद्येदं स्फुटीकृतं मन्ये ।
भगवानपि वामनतां गतो न मान्यः स्वयं ह्यनुन्नत्या ॥६॥

काव्यस्यात्मेत्यादि — प्रथमश्लोकेन नन्विदं कथितम् ।
नानाम्नातः पूर्वं काव्यस्यात्मा ध्वनि र्विबुधैः ॥१३॥
ये न परे ते कतिचन ध्वनेरभावं वदन्तिस्म ।
भिन्नां स्वभणिति-रीतिं समाश्रयन्तो हृदा हीनाः ॥१४॥
अस्मिन्नभावपक्षे पक्षत्रितयं समाविष्टम् ।
केषांचित् प्रथमोऽयं पक्षस्तत्राऽवगन्तव्यः ॥१५॥
शब्दार्थात्मकमेवहि काव्यम्, शाब्दास्त्वलंकाराः ।
शब्दे ऽनुप्रासादिप्रमुखा विदिता विपश्चितां स्पष्टम् । १६॥
उपमाद्य स्तथाऽऽर्थाः समुपस्कारा अपि प्रथिताः ।
संघटनास्थितिमन्तो माधुर्याद्या गुणा अपि प्रथिताः ॥१७॥
संघटनाभ्योऽभिन्ना उपनागरिकादयो यास्तु ।
प्रथितास्ता अपि लोके वृत्तिपदप्रख्यतां याताः ॥१८॥

"काव्यस्यात्माध्वनिरिति" इत्यादि प्रथम पद्य के द्वारा यह बतलाया गया है कि विद्वानों के द्वारा काव्य का आत्मभूत ध्वनि पहले भी चर्चित था अचर्चित नहीं ।१३। ऐसे कुछ लोग जो श्रेष्ठ नहीं थे ध्वनि के अभाव का प्रतिपादन करते थे, जो भिन्न प्रकार की प्रति-पादन-शैली का आश्रयण करनेवाले होते हुए भी सहृदय नहीं थे ।१४। इस अभाववाद के अन्तर्गत तीन पक्ष थे, उसमें कुछ लोगों का प्रथम पक्ष यह ज्ञातव्य है ।

प्रत्येक काव्य शब्द और अर्थ एतदुभयात्मक ही होता है। उनके अन्दर शब्द के अलङ्कार होते हैं अनुप्रास यमक आदि यह विद्वानों को स्पष्ट रूप से मालूम ही है ।१६। अर्थों को अलंकृत करनेवाले उपमा आदि अलङ्कार भी प्रसिद्ध ही हैं। वर्णयोजनात्मक संघटना में पर्य-वसित होनेवाले माधुर्य आदि गुण भी विद्वानों के लिये प्रसिद्ध हैं ।१७। वे उपनागरिका आदि भी अप्रसिद्ध नहीं जो सामान्य रूप में "वृत्ति" नाम से पुकारी जाती हैं और वर्णसंघटनात्मक ही होती हैं उनसे अतिरिक्त और कुछ नहीं ।१८। काव्यों में अनुस्यूत होनेवाली वैदर्भी

वैदर्भीप्रमुखा या रीतिः काव्येषु सन्दृब्धा ।
साऽपि प्रथिता विज्ञै नैवं प्रथिति र्ध्वनावस्ति ॥१९॥
तस्मात् प्रसिद्ध्यभावात् ध्वनि र्न मान्यो विशेषज्ञैः ।
नाश्वासोऽज्ञ-कथायां ध्वनिविषयायामतोऽभावः ॥२०॥
विमतमभावप्रतियोगितावदस्याऽप्रसिद्धत्वात् ।
इत्यनुमानं मानं ध्वने रभावेऽत्र वस्तुतो न्यस्तम् ॥२१॥
न ध्वनिशब्दोऽप्रथितः तस्मादर्थोऽपि तस्य नाऽप्रथितः ।
दुष्टस्तस्माद्धेतुः स्वरूपसिद्ध्या विरहितत्वात् ॥२२॥
साध्यव्याप्तिः पक्षे सत्त्वं हेतावपेक्षितं भवति ।
हेतो स्सद्धेतुत्वे, नात्र विवादोऽस्ति कस्यापि ॥२३॥

गौड़ी आदि रीतियों को भी विज्ञजन जानते हैं किन्तु इन अर्थों में "ध्वनि" शब्द की प्रसिद्धि है नहीं ।१९। इसलिये प्रसिद्धि के अभाव-प्रयुक्त विद्वानों को ध्वनि नहीं मानना चाहिये । रहा अविद्वानों की बात, तो अविद्वानों के कथन पर भला कैसे विश्वास किया जा सकता ? अतः ध्वनि नहीं, ध्वनि का अभाव ही मान्य है। इन बातों के द्वारा ध्वनि के अभाव का स्थापक एक अनुमान प्रमाण वास्तविक रूप में उपस्थित किया गया है जिसका आकार यह ज्ञातव्य है कि विवादास्पद (ध्वनि) अभाव का प्रतियोगी है, क्योंकि खपुष्प वन्ध्यापुत्र आदि की तरह वह अत्यन्त अप्रसिद्ध है ।२१।

ध्वनि शब्द सर्वथा अप्रसिद्ध नहीं है, इसलिये इसका अर्थ भी अप्रसिद्ध नहीं ठहराया जा सकता। अतः उक्त ध्वनि के अभाव का स्थापक अनुमान स्वरूपासिद्धिनामक हेतुदोष से दुष्ट है । अतः वह ध्वनि के अभाव का स्थापक नहीं हो सकता ।२२। अनुमानगत हेतु को सद्धेतु होने के लिये उसमें साध्य की व्याप्ति और पक्ष में विद्यमानता स्वरूप पक्षधर्मता ये दोनों अपेक्षित हुआ करते हैं इस पर किसी को भी विवाद नहीं है ।२३। इसलिये उक्त अनुमान सही न हो पाने के कारण उसके बलपर ध्वनि का अभाव नहीं कहा जा सकता । इस प्रकार

तस्मान्मानाभावात् ध्वनेरभावो न वै वक्तुम् ।
अर्हः प्रभवति कथमपि प्रब्रूयाच्चेद् ध्वनिश्रद्धः ॥२४॥
पक्षस्तदा द्वितीयो ध्वनिविरहख्यापकः तूर्णम् ।
अन्ये ब्रूयुरितीत्थं ध्वनिकारेणात्र सन्दृब्धः ॥२५॥
प्रवहन् ननु वैवर्ण्यं वाद्यसमुत्थो रवो ध्वनिः कथितः ।
नोचुः काव्यविदः, तं काव्यं ये साम्प्रदायिका विबुधाः ॥२६॥
यस्मात् सहृदय-हृदयाऽऽह्लादकता मावहन्तौ हि ।
शब्दार्थावथ काव्यम्, प्रथितं काव्यस्य लक्षणं शुद्धम् ॥२७॥
एतत्परम्परागत - काव्यप्रस्थानतो दूरे ।
प्रथिते ध्वनिपदवाच्ये सम्भवमर्हन्न काव्यत्वम् ॥२८॥
फलतो द्वितीयपक्षे ध्वनिविरहज्ञापके ह्यस्मिन् ।
अन्यविधं त्वनुमानं विध्वनिपक्षा दुपास्थेयम् ॥२९॥
प्रथितं ननु ध्वनित्वं काव्यत्वाभाववद्वृत्ति ।
यस्मात्, नहि काव्यत्वव्याप्यं तस्माद्ध्वनितु मर्हेत् ॥३०॥

यदि ध्वनि पर श्रद्धा रखनेवाले लोग कहें तो ध्वनिकार के द्वारा अपने विपक्षियों की ओर से "अन्ये ब्रूयुः" इत्यादि के द्वारा ध्वनि के अभाव का ख्यापक द्वितीय पक्ष उपस्थित किया गया है ।२५।

हाँ ध्वनि शब्द प्रसिद्ध अवश्य है किन्तु वह वर्णभाव रहित मृदंग आदि वाद्योत्थित शब्द अर्थ में प्रसिद्ध है । किन्तु उस मृदंग वंशी वीणा आदि के शब्दों को काव्यज्ञ विद्वान् काव्य नहीं कहते ।२६। अतः काव्य का शुद्ध लक्षण यही प्रसिद्ध है कि 'सहृदयों के हृदय को आह्लादित करनेवाले शब्द और अर्थ हैं वाक्य" ।२७। काव्य-मार्ग से अति दूरवर्त्ती उक्त प्रसिद्ध ध्वनि शब्द के अर्थ में इस काव्यलक्षण का समन्वय सम्भव नहीं । अतः उसे काव्य नहीं कहा जा सकता ।२८। ध्वनि के अभाव के ज्ञापक इस द्वितीय पक्ष में ध्वनि के अभाववादियों की ओर से एक अन्य प्रकार का अनुमान उपस्थित होता है ।२९। इस नये अनुमान का आकार यह ज्ञातव्य है कि ध्वनित्व काव्यत्व का

व्यापकविरहे व्याप्यव्यतिरेकः सम्भवत्येव ।
काव्यत्वव्यतिरेकिणि ध्वनौ कथं व्याप्य धर्मः स्यात् ॥३१॥
तस्मान्न काव्यभेदो ध्वनिरथ भवितुं प्रशक्नोति ।
ध्वनिकाव्यस्वीकारे तत स्तु विज्ञै दुराग्रह स्त्याज्यः ॥३२॥
साहित्यसम्प्रदायो लोके नैवैकशेषतां धत्ते ।
लोकरुचेर्भिन्नत्वात् ध्वनिर्रापिकाव्यं ततो भवितुमर्हत् ॥३३॥
शब्दस्यार्थो नैकः, प्रभवतु वाद्योत्थितः शब्दः ।
ध्वनिरथ तद्वृत्सहृदय-हृदयाह्लादित्वतो ध्वनिः काव्यम् ॥३४॥
विस्तीर्णायां भूमौ काले चानन्तताभाजि ।
नो ध्वनिरसविरसहृदयविरहः सामान्यतो वाच्यः ॥३५॥

व्याप्य नहीं माना जा सकता है क्योंकि वह काव्य में रहनेवाला नहीं, उसके विपरीत वह वर्णानात्मक उस वाद्योत्थ शब्दों में रहता है जहाँ कि काव्यत्व नहीं काव्यत्व का अभाव रहता है ।३०। जहाँ व्यापक का अभाव रहता है वहाँ व्याप्यका अभाव अवश्य रहता है । ऐसी परिस्थिति में व्यापक काव्यत्व का जहाँ अभाव होगा वहाँ काव्यत्व का व्याप्य भी नहीं रह सकता है ।३१। इसलिये "ध्वनि" को काव्य का प्रभेद नहीं कहा जा सकता, उत्तम काव्य नहीं कहा जा सकता है । अतः विज्ञजनों को चाहिये कि ध्वनिकाव्य के स्वीकार में दुराग्रह का त्याग करें ।३२।

इसके अनन्तर ध्वनिवाद पर आस्था रखनेवालों की ओर से पुनः यह कहा जा सकता है कि साहित्यिकों का सम्प्राय कभी एक-शेष नहीं होता है । क्योंकि लोकरुचि भिन्न प्रकार हुआ करती है । अतः एक साहित्य सम्प्रदाय द्वारा अमान्य घोषित होनेवाला ध्वनिकाव्य दूसरे साहित्य-सम्प्रदाय द्वारा मान्य ठहराया जा सकता है ।३३। एक शब्द के अर्थ अनेक हुआ करते हैं, तदनुसार वीणा-वेणु-मृदंग आदि के शब्द भी ध्वनि कहलाया करें, किन्तु अनेक सहृदयों के हृदय का आह्लादक होने के कारण उत्तम होनेवाला काव्य भी "ध्वनि" काव्य कहला सकता है ।

सहृदः कंचन तस्मात् वै स्यु ध्वनिरसविदो लोके ।
इत्याद्यपि नो वाच्यम्, नहि कथमपि कल्पना शरणम् ॥३६॥

कल्पितमोदकतः किं क्षुत्क्षामस्यास्ति तच्छान्तिः ।
आस्तां वा काल्पनिकी साऽपि, प्रकृतस्य नो सिद्धिः ॥३७॥

काव्यत्वव्यपदेशः कल्पितसहृदः प्रसिद्ध्यर्थम् ।
प्रभवन् प्रवर्त्तितः किं सकलसहृन्मोददः प्रभवेत् ॥३८ ।

तावेव हि शब्दार्थौ काव्येत्वेनात्र मान्यतां धत्तः ।
यौ ननु सकलसहृज्जन हृदयस्यावर्जकौ भवतः ॥३९॥

तस्मान्नहि ध्वनित्वं काव्यत्व-व्याप्यतां धत्ते ।
सति चैवं ध्वनि काव्यं कथमपि मान्यं भवेन्नैव ॥४०॥

भूमण्डल जब कि अति विस्तीर्ण है और काल जब कि अनन्त है असीम है, तब ध्वनिवेदी सहृदयों का सामान्याभाव नहीं कहा जा सकता ।३५। इसलिये इस संसार म ऐसे भी कुछ सहृदय माने जा सकते हैं जो ध्वनि-काव्य जनित आनन्द का अनुभव कर सकते हैं । परन्तु ये बातें भी नहीं कही जा सकता हैं । क्योंकि कारा कल्पना को शरण नहीं दिया जा सकता ।३६। क्या कल्पित मोदक से भूख की भूख जा सकती है ? अथवा उन भूखों का भूख का स्वप्न में काल्पनिक निवृत्ति भी हो जाये, परन्तु इससे प्रकृत ध्वनि का सिद्धि नहीं हो सकती है । कल्पित सहृदयों की सिद्धि के लिये ध्वनिकाव्य कल्पना की गई, और उस कल्पित काव्य का नाम का प्रयोग चल पड़ा ऐसा मानने पर, क्या वह सभी हृदयों को आनन्द देने वाला बन सकता है ? ।३८।

इस सत्य संसार में ऐसे शब्द और अर्थ हो काव्य रूप में मान्यता प्राप्त करते हैं जो कि निश्चित रूप से सभी सहृदयों के हृदयों को अपनी ओर आकृष्ट करते हैं ।३९। अतः ध्वनित्व काव्यत्व का व्याप्य नहीं हो सकता, अर्थात "ध्वनि" काव्य का प्रभेद नहीं कहा जा सकता ।४०।

फलतो ध्वनि र्न काव्यम् सहृच्चमत्कृत्यजनकत्वात् ।
इत्यनुमानं बाधकमानतया स्थापितं पुरतः ॥४१॥
यद्यत्र प्रब्रूयात् ध्वनिवादी नोचितं कथनम् ।
अस्मद्दृष्टौ सहृदो नहि ते ये नो चमत्कृता ध्वनितः ॥४२॥
अज्ञानां बाहुल्यं नो विज्ञानामिति स्थितिः प्रथिता ।
किं काचरत्नभेदज्ञानां बाहुल्यमस्ति भुवनेऽस्मिन् ॥४३॥
नहि बहवो रत्नज्ञाः, किं तस्मात् काचता रत्ने ।
मान्या ? विज्ञैरज्ञान् बहून् प्रपस्यद्भिरुद्भीतैः ॥४४॥
प्रभवति हंसः श्वेतो वहति तथात्वं वकोऽपि सुस्पष्टम् ।
नीरक्षीरविवेचनकृत्यं हंसस्य नो वकस्यास्ति ॥४५॥
विरलाः सहृत्तमाः ते सत्यम ये ध्वनिरसाभिज्ञाः ।
किन्तु ततो ध्वनिविरहो नो वक्तुं शक्यते युक्त्या ॥४६॥

इन कथनों से निष्कर्ष यह प्राप्त होता है कि "ध्वनि" काव्य नहीं, काव्य से भिन्न है क्योंकि वह सहृदयों के हृदय को चमत्कृत करता नहीं।" इस प्रकार का अनुमान इस पक्ष में ध्वनि-काव्य के बाधक रूप में उपस्थित किया गया है।४१।
यदि इसपर ध्वनिवादी यह कहें कि उक्त कथन उचित नहीं। क्योंकि हमलोगों को दृष्टि में वे सहृदय नहीं जिन्हें ध्वनि-काव्य से चमत्कार प्राप्त होता नहीं।४२। संसार में अधिक संख्या अज्ञों की है विज्ञों की नहीं यह स्थिति स्पष्ट है। क्या काच और रत्न के भेद को पहचानने वाले इस संसार में बहुत पाये जाते हैं ? ।४३।

रत्न के पारखी बहुत नहीं पाये जाते हैं इसलिए क्या अज्ञों की ही अधिक संख्या देखने वाले विज्ञों के द्वारा उन बहुसंख्यक अज्ञों के विचारानुसार रत्न को भी काँच मान लिया जाय ? ।४४। यह स्पष्ट है कि हंस भी श्वेत ही होते हैं और वक भी, किन्तु नीर और क्षीर का पृथक्करण हंस ही कर सकता है वक नहीं। ४५।
ध्वनि-रस का आस्वाद ले सकने वाले सहृदयों की संख्या अति अल्प

तर्हि ध्वनेरभावं पुनरपरे वक्तुकामा ये।
तेषां पक्षः पुनरित्यादि-ग्रन्थेन वर्णितो विशदम् ॥४७॥
अस्तु ध्वनिः प्रसिद्धो, वहतु तथा कामनीयकं स्वस्मिन्।
किन्तु न धत्ते नवतां ध्वनिरिति संज्ञैव नूतना यस्मात् ॥४८॥
अस्त्यथ यदि चारुत्वं ध्वनौ हृदावर्जकं किञ्चित्।
शब्दार्थालङ्कारादिष्वेवान्तर्गति स्तस्य ॥४९॥
नाऽपूर्वसंज्ञयैव हि भवत्यपूर्वं किमप्यत्र।
श्वसुरालयं गतो यदि जामाता कथ्यते लोकैः ॥५०॥
तत्रत्यैः किं कोऽपि प्रभवति तस्मात् स्वतो भिन्नः।
ये काव्यालङ्काराः युगपन्नो ते समुद्भूताः ॥५१॥

है, वे विरल हैं यह सत्य है किन्तु इसके कारण युक्तिपूर्वक ध्वनि का अभाव नहीं स्थिर किया जा सकता। इस प्रकार ध्वनि-सिद्धि के अनन्तर भी जो अन्यजन ध्वनिका अभाव स्थिर करना चाहते हैं उनके पक्ष को "पुनः" इत्यादि ग्रन्थ के द्वारा ध्वनिकार आनन्दवर्धन ने विशद-रूप में उपस्थित किया है। ४७। ध्वनि अप्रसिद्ध नहीं यह भी मान लिया जाय। वह अपने में कमनीयता अर्थात् सुन्दरता को भी धारण करे, किन्तु फिर भी ध्वनि कोई नयी वस्तु नहीं। क्योंकि किसी पुरानी वस्तु को "ध्वनि" यह नया नाम मात्र दे दिया गया है।४८। यदि ध्वनि में सहृदयों के हृदयों को आकृष्ट करने की क्षमता है तो ध्वनि का शब्दालङ्कार या अर्थालङ्कार में ही उसका अन्तर्भाव हो जायेगा।४९।

नवीन नामकरण मात्र से कोई वस्तु नयी नहीं हो उठती। प्रत्येक विवाहित व्यक्ति ससुराल जाने पर वहाँ के अनेक लोगों द्वारा "जामाता" इस नये नाम से पुकारा जाता है, परन्तु वह क्या उस नवीन शब्द से पुकारे जाने कारण, अपने से अन्य हो उठता है? ।५०। जितने अलङ्कार उपलब्ध हैं वे सभी एक ही साथ प्रकाश में नहीं आये।५१। किन्तु सभी अलङ्कार के अन्दर ही मान्य हैं, अलङ्कार ही

किन्तु समेऽलङ्कारान्तः—पातित्वं व्रजन्त्येव ।
ध्वनिरपि तथैव पश्चादुद्भूतोऽन्तर्गतिं व्रजतु ॥५२॥
यदलीक-सहृदयत्वं विभावयद्भि मुंकुलिताक्षैः ।
स्वस्मिन्, ध्वनिर्ध्वनिरिति प्रनृत्यते तत्र नो हेतुः ॥५३॥
तस्मात् प्रवादमात्रं ध्वनिरिति, नो वै विचार-सहम् ।
तत्त्वं किञ्चिद्वक्तुं शक्यं प्रभवेन्नवीनं यत् ॥५४॥
ध्वनिरन्तर्गतिमाप्तोऽलङ्कारादौ चमत्कृति-करत्वात् ।
इत्यनुमानं फलतः पक्षेऽस्मिन् लभ्यते विशदम् ॥५५॥
यस्मिन्नस्ति न वस्त्विति पद्यं पक्षत्रयद्योति ।
ध्वनिवाद्युपहासकमिह ध्वनिकृद्भिः स्थापितं पुरतः ॥५६॥
ये व्यञ्जनामपि सतीं लक्षणयाऽऽत्मीकृतामाहुः ।
ते भक्तिभक्तिमन्तो ध्वनिकाव्यं भाक्तमेवाहुः ॥५७॥

कहलाते हैं। ध्वनि भी उसी प्रकार कभी प्रकाश में आने के कारण अलङ्कारों के अन्दर एक मान लिया जाय। ५२। अपने में अलीक सहृदयता की भावना के फलस्वरूप आखें बन्द कर जो "ध्वनि-ध्वनि" कहकर जोरों से नाचते हैं उसका कोई हेतु नहीं। ५३। अतः बन्ध्या-पुत्र आदि की तरह ध्वनि यह एक "कहने भर का है" प्रवाद मात्र है। कोई नवीन तत्त्व जो कि विचार करने पर वास्तव में टिकपाये हैं नहीं। ५४। इस प्रकार किये जानेवाले विचार के फलस्वरूप ध्वनि की सिद्धि के विरुद्ध एक अनुमान प्रमाण उपस्थित होता है जिसका स्पष्ट आकार यह है कि—ध्वनि अलङ्कार आदि के ही अन्तर्गत है। क्योंकी चमत्कारी हैं।" । ५५। उक्त प्रकार प्राप्त होने वाले ध्वनि विरोधियों के पक्षत्रय को ध्वनिवादी के प्रति उपहासकर रूप में उपस्थित किया है ध्वनिकार ने ध्वनिवादियों के समक्ष। ५६।

ऐसे ध्वनिविरोधीजन जो कि व्यञ्जना वृत्ति का अन्तर्भाव लक्षणा ही में मानते हैं वे ध्वनि-काव्य को भाक्त कहते हैं। ५७। ऐसे भक्तिवादी ध्वनिविरोधियों की ऐसी स्वीकृति के कारणको ध्वनिकार ने "यद्यपि च"

एषामेवं स्वीकृति - कारणमिदमत्र मन्तव्यम् ।
यद् यद्यपिचेत्यादिकवृत्त्या ध्वनिकारसम्प्रोक्तम् ।।५८।।
सत्यं यद्यपि भामह-प्रभृतिभिरुद्बुद्ध-बुद्धिभिर्नैव ।
ध्वनि-शब्दो गुणवृत्त्यादिक-वाचित्वेन सम्प्रोक्तः ।।५९।।
किन्तूद्भट-वामनमति रीषत्स्पृष्टेव भाति यतः ।
ध्वनिसिद्धान्तात् भक्त्या काव्यव्यवहार मादधतो ।।६०।।
भाक्तं तस्मात् काव्यं ध्वनिशब्देनापि सम्प्रोक्तम् ।
नान्यत् किञ्चिदितीत्थं मतमवसेयं तथान्येषाम् ।।६१।।

पक्षेऽस्मिन् ज्ञातव्या युक्तिरथापातरम्येयम् ।
द्विविधः खलु सम्बन्धः प्रभवति गौणश्च मुख्यश्च ।।६२।।
अयमेवहि साक्षादथ पारम्परिकश्च कथ्यते विबुधैः ।
एतद्द्वैविध्यानाऽक्रान्तो नैवास्ति सम्बन्धः ।।६३।।

इत्यादि वृत्ति-ग्रन्थ द्वारा बतलाया है।५८। सरल अभिप्राय यह है कि यह सत्य है कि भामह प्रभृति प्रखर बुद्धि-सम्पन्न सज्जनों द्वारा "ध्वनि यह शब्द गुणवृत्ति भक्ति आदि अर्थों में प्रयुक्त हुआ है किन्तु लक्षणात्मक भक्ति को लेकर काव्य व्यवहार का सम्पादन करनेवाले उद्भट वामन आदि की बुद्धि ध्वनि सिद्धान्त को, अति-अल्प रूप में ही सही, स्पर्श करती हुई सी पायी जाती है। इसलिए भक्ति अर्थात् लाक्षणिक काव्य ही "ध्वनि" नाम से भी कहा जाता है। और कुछ ध्वनि नाम से कहा जाता नहीं यही मत औरों का भी ज्ञातव्य है।६१।

इस प्रकार कहनेवाले भक्तिवादीजनों के पक्ष में आपात - रमणीय युक्ति यह ज्ञातव्य है कि—सम्बन्ध कहलानेवाले द्विविध होते हैं, एक मुख्य और दूसरा अमुख्य।६२। वे ही सम्बन्ध विद्वानों के द्वारा (१) साक्षात्-सम्बन्ध और (२) परम्परा-सम्बन्ध भी कहे जाते हैं। सभी सम्बन्ध इन्ही दो सम्बन्ध-प्रभेदों के अन्तर्गत हैं, कोई भी सम्बन्ध इनके बाहर नहीं जा सकता।६३। इस वास्तविकता के आधार पर

एवं सत्यर्था अपि द्वैविध्याक्रान्ति मागता एव ।
असहत्साधारण्यं वाच्योऽर्थः प्रव्रजन्नैव ॥६४॥
प्रसृतेक्रमत्कृतिकरः, पारम्परिकस्तथा तस्मात् ।
पारम्परिकार्थमयं काव्यं ध्वनिसंज्ञया वाच्यम् ॥६५॥
उद्बुद्धैरेवार्थः पारम्परिको यतो ग्राह्यः ।
भक्तिः परम्परा वा गुणवृत्ति र्वाऽपि नो भिन्ना ॥६६॥
"आहुः" कथनात स्वरसास्वरसावुक्ताविहेति मन्तव्यम् ।
स्वीकृत्याऽस्ति स्वरसो रूपान्तरतामुपेत्य चास्वरसः ॥६७॥
ध्वनिकाव्यं ननु भाक्तं लक्ष्येनार्थेन घटितत्वात् ।
इत्यनुमानं मानं बोध्यं ध्वनिभाक्ततापक्षे ॥६८॥
केचित्पुनरव्याप्त्यादिकरहितं लक्षणं कर्तुम् ।
कोमलबुद्धितया नो शक्ता गुडभोक्तृमूकसंकाशाः ॥६९॥

शब्द के अर्थ भी दो ही प्रकार के हो सकते हैं।६४। इसलिए परम्परा-सम्बन्ध को आश्रयण करनेवाला गौण अर्थ ही चमत्कारी होता है, इसलिए पारम्परिक अर्थात् गौण-अर्थमय काव्य ही ध्वनि नाम से कहा जाय यह उचित है।६५। क्योंकि पारम्परिक अर्थ ही प्रबुद्ध जनों के द्वारा गृहीत होता है। भक्ति कहें परम्परा-सम्बन्ध कहें या गुण-वृत्ति कहें ये सब एक ही हैं।६६। इस मत के प्रतिपादक वाक्य के अन्त में ध्वनिकारने "आहुः" शब्द का प्रयोग करके कुछ सम्मति और कुछ असम्मति दोनों को ही व्यक्त किया है।६७। इस ध्वनि काव्य को भाक्त कहनेवाले के पक्ष में यह अनुमान प्रमाण उपन्यस्त समझना चाहिए कि "ध्वनि काव्य भाक्त है क्योंकि वह लक्ष्यार्थ से घटित होता है।६८।

कुछ लोग अति-कोमल-बुद्धिवाले होने के कारण अव्याप्ति अतिव्याप्ति आदि दोष रहित ध्वनिलक्षण के सम्पादन में सर्वथा असमर्थ हैं। वे ध्वनि के सम्बन्ध में अपने को गुड की मधुरता का आस्वाद लेनेवाले गूंगे के समान मानते हैं।६९।

कथयन्त्येवं सत्यं यद् ध्वनिरस्तीति, किन्तु नो शक्यम् ।
वक्तुं तल्लक्षणमथ तद्धि वचोऽगोचरं तत्त्वम् ॥७०॥

यद् यद् वस्तु न तत्तत् सर्वं प्रतिपाद्यतामेति ।
कथमन्यथा तुरीयं ब्रह्म वचोऽगोचरं प्रोक्तम् ॥७१॥

तस्मात् सहृदयमात्रज्ञेयं ध्वनितत्त्व मेतद्धि ।
निर्वचनस्यानर्हं नो लक्षणलक्ष्यतां धत्ते ॥७२॥

वैमत्यापन्नेष्विह वादिष्वेतेषु पर-पर-श्रेष्ठयम् ।
यस्माद् भ्रान्तास्ते ये ध्वनेरभावं वदन्तिस्मं ॥७३॥

स्वीकुर्वन्तोऽपि च तं विप्रतिपन्नस्तु तद्रूपे ।
ते फलतः सन्दिग्धाः संशय एव स्थितिर्यस्मात् ॥७४॥

अतः ऐसा कहते हैं कि ध्वनि है तो सही, किन्तु उसका लक्षण नहीं किया जा सकता । क्योंकि वह वाणी का विषय होने वाला नहीं ।७०। यह नहीं कहा जा सकता कि संसार की प्रत्येक वस्तु का लक्षण किया जा सकता ही, उसका प्रतिपादन हो ही सकता हैं । क्योंकि यदि ऐसा नियम माना जाय कि प्रत्येक पदार्थ निवर्चन योग्य ही होता है तो अद्वैत-वेदान्त-सिद्धान्त में तुरीय ब्रह्म को वाणी का अविषय कैसे माना गया है ? ।७१। इसलिए सहृदय-हृदयमात्रगम्य यह ध्वनित्व निर्वचन योग्य नहीं है । उसका लक्षण सम्भव नहीं, वह किसी लक्षण का लक्ष्य नहीं हो सकता ।७२।

इन विमतिग्रस्त वादियों के अन्दर पूर्व-पूर्व की अपेक्षा, पर-परवर्ती की श्रेष्ठता ज्ञातव्य है । विमतिग्रस्त तीनों प्रकार के वे वादी जो कि ध्वनि का अभाव मानते हैं सर्वथा भ्रान्त हैं ।७३। यहाँ पीछे-पीछे आने वाले वे वादी जो कि ध्वनि को मानते हुए भी उसके स्वरूप के सम्बन्ध में विप्रतिपन्न थे, अनिश्चय-ग्रस्त थे, वे ध्वनि के स्वरूप के सम्बन्ध में संशय-ग्रस्त होनें के कारण सन्दिग्ध थे ।७४।

शक्तिविभिन्ना वृत्तिर्भक्ति श्चैतद्धि भक्तित्वम् ।
व्यञ्जनलक्षणयोरथ सामान्यं, निश्चयो न ततः ॥७५॥
ये गुडमुड्मूका इव निर्वचनं कर्त्तुमसमर्थाः ।
स्वाधीनं ध्वनितत्त्वं स्वीकुर्वन्तो द्वयोः श्रेष्ठाः ॥७६॥
भ्रान्तानथ सन्दिग्धान् निर्वचनं कर्त्तुमसमर्थान् ।
लोकानुद्दिश्य यतः कोप्युपदेशे प्रवर्त्तते विबुधः ॥७७॥
ध्वनि-विषयोह्युपदेशः तस्मादौचित्य-भाग् भवति ।
यस्मादत्र तथाविधवादिन एते ननु प्राप्ताः ॥७८॥

अभिधात्मक शब्दगत स्वाभाविक शक्ति से भिन्न शब्द-शक्ति कहलाती है भक्ति, और यही है भक्ति का भक्तित्व। ऐसी परिस्थिति में स्वाभाविकता से भिन्न अस्वाभाविकता-स्वरूप भक्तित्व, लक्षणावृत्ति और व्यञ्जनावृत्ति दोनों में समान होनें के कारण, साधारण-धर्मज्ञानाधीन संशय का होना स्वाभाविक है अतः भक्तिवादी का सन्दिग्ध कोटि में आना स्वाभाविक है। क्योंकि उक्त प्रकार सामा-न्यधर्मज्ञान मात्र के कारण उन्हें ध्वनि-काव्य-स्थल में लक्षणा और व्यञ्जजना के अन्तर्गत अन्यतर का निश्चय नहीं।७५।
अनन्तर आनेवाले ध्वनि के निर्वचन में असमर्थं गुड़-गत मधुरता का आस्वाद करने वाले मूक व्यक्ति की तुलना रखनेवाले तीसरे वादी उक्त दोनों प्रकार के वादियों से श्रेष्ठमान्य होंगे। क्योंकि इन्होंने स्वधीन ध्वनितत्त्व को मान्यता तो दी ? लक्षण भले ही ध्वनि का नहीं कर पायें, परन्तु वस्तुस्थिति की मान्यतातक तो पहुँचे ?।७६। भ्रान्त, संदिग्ध और निर्वचनासमर्थ इन तीन प्रकार के लोगों को उद्देश्य करके ही यतः विज्ञजन उपदेश में प्रवृत्त हुआ करते हैं।७७। अतः आचार्य आनन्दवर्धन द्वारा किया जानें वाला यह ध्वनितत्त्व का उपदेश भी औचित्य-प्राप्त हैं क्योंकि उक्त तीन प्रकार के वादी यतः प्रकृत ध्वनितत्त्व के सम्बन्ध में प्राप्त हो चुके हैं।७८।

प्रीतिस्सहृदयमनसि स्यादेवास्मान्निरूपणान्मन्ये ।
परमिदमिह साफल्यं ध्वनिस्वरूपं ततो ब्रूमः ॥७९॥
सत्कविकाव्योपनिषद्भूत मथातीव-रमणीयम् ।
सदपि ध्वनिस्वरूपं नान्यैरुन्मीलितं पूर्वम् ॥८०॥
विहिते निरूपणेऽस्मिन् रामायणभारतादिगतलक्ष्ये ।
तल्लक्षणं गमयता मानन्दः स्यात् सहृदयानाम् ॥८१॥
नाऽतो निरूपणमिदं व्यर्थं केनाऽपि शक्यते वक्तुम् ।
इत्यादिकमतिविशदं प्रोक्तं ध्वनिकृद्भिरतिरुचिरम् ॥८२॥
प्रोक्ता अनुबन्धा अपि ग्रन्थारम्भोचिताः सर्वे ।
विषयो ध्वनिरिह सहृदय-हृदयप्रीति स्तथा ज्ञानम् ॥८३॥

आचार्य आनन्दवर्धन ने अपने ध्वन्यालोक की रचना के सम्बन्ध में कहा है कि औरों को न सही, मैं समझता हूँ कम से कम सहृदयों को तो इस ध्वनि-निरूपण से आनन्द-लाभ होगा ही। इससे बढ़कर भला क्या सफलता कही जा सकती? अतः मैं यहाँ ध्वनि का स्वरूप बतला रहा हूं।७९। ध्वनि का स्वरूप सभी सत्कवियों के काव्यों का सारभूत है अतः अत्यन्त रमणीय है, जो कि आज तक, पूर्ण रूप से विज्ञों द्वारा स्पष्ट नहीं किया जा पाया है।८०। इस ध्वन्यालोक ग्रन्थ में ध्वनि का स्वरूप-निरूपण हो जाने पर रामायण महाभारत आदि-गत लक्ष्यभूत ध्वनि काव्यों में आनन्दवर्धनकृत ध्वनिलक्षण के होते हुए समन्वय को देखकर सहृदयजन अवश्य प्रसन्न होंगे।८१। इसलिए यह यहाँ किया जाने वाला ध्वनि-निरूपण किसी के द्वारा गर्हणीय नहीं कहा जा सकता, इत्यादि बातें आनन्दवर्धनाचार्य ने सुन्दरशैली में कहा है। ग्रन्थारम्भ के लिए उचित होनेवाले चारों अनुबन्ध भी आचार्य के द्वारा प्रदर्शित हुए हैं कि इस ग्रन्थ का विषय है "ध्वनि"। सहृदयों को होने वाला ध्वनि का ज्ञान और तत्प्रयुक्त उन्हें होने वाला आनन्द है इसका फल। फिर उक्त दोनों फलों को चाटने वाले हैं अधिकारी, और ध्वनि

फलमिह, तत्कामः स्यादधिकारीत्यपि ननु स्पष्टम् ।
प्रतिपाद्य-प्रतिपादकभावः सम्बन्धतां धत्ते ॥८४॥
ग्रन्थविषययोर्नित्यं नात्र विवादोऽस्ति केषाञ्चित् ।
अव्यवहितोत्तरमिह ध्वनितत्त्वस्थापनं विहितम् ॥८५॥
काव्यं शब्दार्थाविति पूर्वमपि प्रोक्तमेवैतत् ।
शब्दस्तत्र शरीरं बाह्यत्वात्, आत्मता त्वर्थे ॥८६॥
ललितोचितरचनाकृत—चारुत्ववतो हि काव्यस्य ।
सहृदयश्लाघ्यस्त्वर्थः स्यादात्मा, ऽऽन्तरतया युक्तेः ॥८७॥
नाविदितं केषांचित् रामश्यामादि-पदवाच्ये ।
बाह्येऽसृङ्मांसादौ प्रभवति देहत्वमेव नात्मत्वम् ॥८८॥
देहेनावच्छिन्नः प्रभवत्यात्मा गृहीत-बोधादिः ।
स्थूलदृशा नो दृश्यः, तद्वदिहापि प्रविज्ञेयम् ॥८९॥

तथा इस ध्वन्यालोक के बीच होने वाला प्रतिपाद्य-प्रतिपादकभाव है सम्बन्ध ।८४। सर्वत्र विषय और ग्रन्थों के बीच प्रतिपाद्य-प्रतिपादकभाव ही सम्बन्ध हुआ करता है, अतः इसके सम्बन्ध में कोई विवाद नहीं। इसके अनन्तर—ध्वनितत्त्व को स्थापन किया गया है ।८५।
यह बात पहले भी बतलायी जा चुकी है कि शब्द और अर्थ ही हैं काव्य। वहाँ दोनों के बीच बाह्य होने के कारण शब्द होते हैं शरीर-स्थानीय और अर्थ उसकी अपेक्षा आत्म-स्थानीय ।८६। क्योंकि ललित और उचित रचना-प्रयुक्त चारुता को धारण करने वाले काव्य की आत्मा अर्थात् सारभूत वस्तु अर्थ ही है, यह इसलिए मान्य है कि शब्द और अर्थ इन दोनों के बीच अर्थ अन्तर है ।८७। यह किसी को अज्ञात नहीं कि राम श्याम आदि किसी भी नाम के नामी राम श्याम आदि आदि, व्यक्ति के सम्बन्ध में विवेचन करने पर यही निर्णीत होता है कि मांस शोणित आदि में, देहता ही होती है आत्मता नहीं ।८८। और ज्ञान इच्छादि-सम्पन्न और देह से अवच्छिन्न अर्थात् सीमितीकृत होने-

आत्मत्वमादधानः प्रभवत्यर्थोऽपि यः काव्ये ।
तस्य द्वावथ भेदौ भवतो वाच्य-प्रतीयमानाख्यौ ॥९०॥
वाच्योऽन्यथों नैको यो बहुधा व्याकृतस्त्वन्यैः ।
तस्मात्तस्य विवेचनमिह नो धत्ते विधेयतां स्वस्मिन् ॥९१॥
सत्येवं ननु योक्तिः प्राचीनोक्तस्य कुत्राऽपि ।
प्रकृतोपयोगयोगात् ज्ञेया ह्यनुवादभूता सा ॥९२॥
अग्निर्हिमस्य भेषजमित्यनुवादो न चेद्वेदे ।
दोषायात्र कथं स्यादनुवादो यः समुपयोगी ॥९३॥
विधिरप्राप्तावेव हि मान्यो, नान्यत्र माननीयोऽसौ ।
इति निश्चयात्समेषाम् विधि र्न मान्यः परोक्तस्य ॥९४॥
तड़िदिव गौरीत्युक्तौ प्रभवत्युपमाऽपि वाच्यभूता हि ।
यस्मात्तस्माद्वाच्यालंकाराद्याः परैरुक्ताः ॥९५॥

वाला देह-भिन्न स्थायी तत्व है आत्मा। जो कि स्थूल चर्मचक्षु से देखा नहीं जाता है। इसी प्रकार काव्य स्थल में शब्द को देह और अर्थ को आत्मा मानना उचित है ।८९। काव्य के अन्दर आत्मत्व को धारण करने वाला अर्थ दो प्रकार का होता है, जिसके अन्दर एक का नाम होता है वाच्य, और दूसरे का प्रतीयमान ।९०।
अनेकता प्राप्त वाच्य अर्थ अन्य विवेचकों द्वारा बहुधा विवेचित हो चुके हैं अतः उस बाच्य अर्थ का विवेचन इस ध्वन्यालोक ग्रन्थ में विधेय नहीं ठहराया जा सकता ।९१। ऐसी परिस्थिति में कहीं भी जो, प्रकृत में उपयुक्त होने के कारण पूर्वोक्त की भी उक्ति की जाती है, वहाँ उस उक्ति को अनुवाद भूत समझना चाहिए विधानात्मक नहीं। वेद के अन्दर आने वाला "अग्निर्हिमस्य भेषजम्" अर्थात् आग जाड़े की दवा है, इत्यादि वाक्य यदि अनुवाद वाक्य माना जाता है तब ज्ञात-ज्ञापक अन्य वाक्य क्यों न अनुवाद वाक्य होगा? ॥९३॥ यह बात सबके लिए मान्य है। "विधान" अप्राप्त अर्थ के सम्बन्ध में ही हुआ करता है अनन्य अर्थात्

वाच्यात्प्रतीयमान स्त्वर्थो घरो सदाऽन्यत्वम् ।
नहि वनितालावण्यं भवति तदंगं परन्तु तद्योगि ॥९६॥
"पुनरन्यदेव"वस्त्विति यत् प्रोक्तं ध्वनिकृता पद्ये ।
तत्र च-वस्तुत्वं नो व्यंग्यत्व-व्याप्य मास्थेयम् ॥९७॥
तस्मान्महाकवीनां वाणीषु व्यक्तिमायाते ।
नालङ्कार रसादाववस्तुनि स्यादिहाऽव्याप्तिः ॥९८॥
प्रभवत्वलंकृतिर्वा वस्त्वथव ननु रसो वाऽपि ।
वनितांगग-लावण्य-प्रतिमोऽसौ नैव वाच्यः स्यात् ॥९९॥
रसवस्त्वलङ्कृतिस्त्वथ वस्तूत्पन्नं प्रसिद्धं यत् ।
तस्मात्तदुदाहरणत्वेनो ऽपादाय बुध्यतां मेदः ॥१००॥

ज्ञात-ज्ञापक वाक्य वह मान्य नहीं ।९४। यतः "तडिदिव गौरी" इत्यादि संस्कृत-वाक्य प्रयोग-स्थलों में वाच्य होने कारण उपमा भी वाच्य होती है अतः वाच्यभूत अलङ्कार अर्थात् अलङ्कारगत वाच्यत्व और लोगों के द्वारा प्रतिदादित है ।९५।

प्रतीयमान अर्थ वाच्य अर्थ से अन्य ही माना गया है। सुन्दरी की सुन्दरता उस सुन्दरी का विभिन्न अङ्ग नहीं किन्तु सभी अङ्गों से अतिरिक्त होते हुए उस सुन्दरी के सारे अंगों में अनुस्यूत होती है। ९६। "प्रतीयमानं पुनरन्यदेववस्त्वादि पद्य में ध्वनिकार के द्वारा जो "वस्तु" इस शब्द का प्रयोग किया है वहाँ वस्तुत्व को व्यंग्यत्व का व्याप्यभूत वस्तुत्व नहीं समझना चाहिए। अर्थात् विभिन्न बस्तु-ध्वनि, रस-ध्वनि, और अलंकार-ध्वनियों के विद्यमानत्व में वस्तु अलंकार और रसादि तीनों विषय-प्रभेदों के संग्राहार्थ उक्त इन तीनों विषयों के संग्राहक रूप में एक मात्र वस्तु को नहीं लेना चाहिए ।९७। अतः महाकवियों के ध्वनि काव्यों के सारभूत रस एवं अलंकार में प्रकृत वस्तुत्व की अव्याप्ति नहीं हो पाती है ।९८। ध्वनि-काव्यस्थल में अलंकार हो या वस्तु हो अथवा रस हो, कोई भी वनिता के समस्त अंगों में अनुस्यूत सौन्दर्य की समानता के कारण वाच्य नहीं हो सकता ।९९। रस वस्तु और अलंकार

प्रभवन् विधेर्निषेधस्य हि भेदो वार्यतां केन ।
केन कथं वा ? भावाभावविभेदः स्फुटो यस्मात् ॥१०१॥

सत्येवं कामिन्या कयाचिदेवं यदा भणितः ।
युवकः कोऽपि तदर्थं चेष्टाशीलः तया दृष्टः ॥१०२॥

भ्रम धार्मिक विश्वस्तः स श्वाऽद्य मारितस्तेन ।
गोदावरी-कच्छकुंजवासवता दृप्तसिंहन ॥१०३॥

तत्र प्रभवति वाच्यस्त्वर्थो विधिरूपताशाली ।
किन्तु प्रतीयमानः प्रतिषेधो यः ततो भिन्नः ॥१०४॥

यस्मादति-भीतत्वान्नागमनं ते, मृतः श्वाऽसौ ।
गोदातटगत-कुंजे वसता सिंहेन दारितो यस्मात् ॥१०५॥

इन तीनों के अन्दर "वस्तु सर्वाधिक प्रसिद्ध है अतः उसे ही लेकर वाच्य और व्यंग्य के बीच होने वाले पारस्परिक-भेद को समझा जाय ।१००। विधि और निषेध के बीच होने वाला पारस्परिक-भेद, किसके द्वारा किस हेतु से, कैसे हटाया जा सकता है ? क्योंकि भाव पदार्थ और अभाव पदार्थ में होने वाली भिन्नता सुस्पष्ट है ।१०१। ऐसी वस्तुस्थिति में किसी तरुणी के द्वारा तदर्थ चेष्टाशील कोई युवक अब उस युवती के द्वारा देखे जाने पर इस प्रकार कहा जाता है कि ओ धार्मिक ! अब निर्भय होकर इधर घूमा करो । क्योंकि निकटवर्ती गोदावरी नदी के तटपर स्थित झाड़ी में बसनेवाले दर्पीले सिंह के द्वारा वह कुत्ता मारा गया । ऐसे कथन स्थल में वाच्य अर्थ तो होता है विधि-रूप, किन्तु प्रतीयमान व्यञ्जना-वृत्ति के द्वारा लभ्य होने के कारण व्यंग्य अर्थ होता है वह निषेध, जो कि होता है वाच्यअर्थभूत विधि से अत्यन्त भिन्न ।१०४। जिससे अत्यन्त भय पाने के कारण तुम वहाँ नहीं आया जाया करते थे वह कुत्ता मर गया । गोदावरी नदी के तट पर बसनेवाले सिंह द्वारा वह मारा गया ।१०५। इसलिए भय रहित होकर तुम यहाँ भ्रमण किया करो,

भयरहितेनेदानीमत्र विधेयं त्वया भ्रमणम् ।
तस्मादिति वाच्योऽर्थो विधिरूपोऽत्र स्फुटीभवति ॥१०६॥
किन्तु प्रतीयमानो नासावर्थस्त्वितोऽस्ति विपरीतः ।
प्रभवति निषेधरूपो मा भ्रमणं कुरु यतो भीतः ॥१०७॥
कुक्कुरतो यो भीतो, न स्यात् सिंहात् कथं भीतः ।
एवं प्रतीयमानो वाच्यादर्थाद् विभेदवान् भवति ।१०८॥
सति चानयोर्विभेदे प्रधान्यमपि द्वयो भिन्नम् ।
नह्येकस्मिन् काव्ये द्वयोरतः स्यात प्रधानत्वम् ॥१०९॥
किंनाम प्रधान्यं जिज्ञासा चेदियं प्रकृते ।
सहृदय-हृदयाह्लादातिशयकरत्वं हि तज् ज्ञेयम् ॥११०॥

यह वाच्य अर्थ उक्त "भ्रम धार्मिक" इत्यादि वाक्य के उक्त प्रयोगस्थल में स्पष्ट होता है।१०६। किन्तु उक्त वाक्य से प्रतीयमान रूप में प्राप्त होने वाला अर्थ उक्त प्रकार यह भ्रमण-विधान नहीं होता है जो कि वाच्य अर्थ रूपमें प्राप्त होता है। परन्तु उसके स्थान में प्रतीयमानरूप में प्राप्त यह होता है कि तुम जिस-लिए बड़े डरपोक हो इसलिए अब तो यहाँ जाना आना मत करना।१०७। जो कुत्ते से डरता है वह भला सिंह से कैसे नहीं डरेगा? इस प्रकार भ्रमण-निषेधात्मक प्रतीयमान अर्थात् व्यंग्य अर्थ वाच्य अर्थभूत "भ्रमणविधान से अत्यन्त भिन्न हुआ करता है ।१०८। इस प्रकार वाच्य अर्थ और प्रतीयमान अर्थ के बीच विभिन्नता स्पष्ट हो जाने पर वाच्य अर्थ और प्रतीयमान अर्थ दोनों में एक ही प्रकार प्रधानता की स्थिति नहीं मानी जा सकती। वक्तव्य यह है कि कहीं वाच्यार्थ प्रधान होगा तो कहीं प्रतीयमान अर्थ। एक ही काव्य वाक्य-स्थल में वाच्य अर्थ और व्यंग्य अर्थ दोनों प्रधान नहीं हो सकते ।१०९। प्रकृत में प्रधानता का निर्वचन क्या हो सकता है? ऐसी जिज्ञासा हो तो ज्ञातव्य यह है कि सहृदयों के हृदय में अधिक आह्लाद देने की क्षमता" ही होगी प्रकृत प्रधानता ।११०। यही प्रधानता किसी काव्यस्थल में वाच्य अर्थ में

एतद्धि प्राधान्यं वाच्यार्थगतं क्वचित् काव्ये ।
क्वचिदपरत्र न तत् स्यात, प्रतीयमान-प्रधानत्वात् ॥१११॥
यत्र प्रतीयमाने प्राधान्यं तत् ध्वनिः काव्यम् ।
"ध्वन्यत अनेन" इति तद्व्युत्पत्त्या तस्य सिद्धत्वात् ॥११२॥
पदतस्तदेकदेशादपि वा यत्रास्ति तद् ध्वननम् ।
प्रोक्ताह्लादकतायाः तौल्यात्स्यान्नो कथं ध्वनिता ॥११३॥
वाच्य-प्रतीयमानावेवार्थौ ध्वनिकृता प्रोक्तौ ।
लक्ष्य स्त्वर्थो नोक्तः, किमत्र बीजं परिज्ञेयम् ॥११४॥
इति चेदिह जिज्ञासा, बोध्यमितीदं तदुत्तरं साधु ।
नो लक्ष्यार्थत्यागाभिप्रायो ध्वनिकृतामत्र ॥११५॥

होगी और किसी वाच्य स्थल में यह वाच्य अर्थगत न होगी क्योंकि वहाँ प्रतीयमान अर्थात् व्यंग्य अर्थगत होगी प्रधानता ।१११। जहाँ प्रतीयमान अर्थ में प्रधानता होती है वह काव्य ध्वनि कहलाता है। जिसके द्वारा अर्थ ध्वनित हो वह कहलाता है "ध्वनि" इस प्रकार "ध्वनि शब्द की व्युत्पति के अनुसार उक्तप्रकार काव्य ध्वनि कहलाता है ।११२। जहाँ पूरे काव्य वाक्य से सुन्दर व्यंग्य अर्थ ध्वनित न होकर काव्य वाक्य के एक देशभूत पद के द्वारा अथवा उसके अंश के एक देश द्वारा भी सुन्दर व्यंग्य अर्थ व्यक्त होता है वहाँ भी अह्लादकता की तुलना के आधार पर पूरे काव्य-वाक्य को क्यों न ध्वनित्व होगा ।११३। यहाँ ध्वनिकार के द्वारा वाच्य और प्रतीयमान दो ही अर्थ शब्द के बतलाये गये हैं। मालूम नहीं तृतीय प्रकार अर्थ "लक्ष्य" क्यों न शब्द के अर्थ रूप में बतलाया गया ? इसका ज्ञातव्य रहस्य क्या है ?।११४। ऐसी जिज्ञासा हो तो उसका सही उत्तर यह ज्ञातव्य है कि लक्ष्य अर्थ के अस्वीकार में ध्वनिकार का अभिप्राय नहीं है । किन्तु अभिप्राय यह ज्ञातव्य है कि ऐसा काव्य तो होता है जहाँ लक्ष्य अर्थ बिलकुल न हों, किन्तु ऐसा कोई काव्य नहीं हो सकता जहाँ वाच्य और प्रतीयमान अर्थात् व्यंग्य अर्थ न हों ।११५। इसी के प्रतिपादनार्थ वाच्य

प्रभवति परन्तु काव्यं यत्र न लक्ष्यो भवत्यर्थः ।
वाच्यप्रतीयमानावर्थौ तत्रापि सम्भवतः ॥११६॥
प्रतिपादयितुं त्वेवं ध्वनिकृद्भि र्ननु तथा प्रोक्तम् ।
यद्वा पूर्णे काव्ये प्रतिपादकतामुपादाय ॥११७॥
वाक्यं चेल्लक्षकतां धत्ते, पदतां व्रजत्यसौ त्वरितम् ।
मुख्यं निदर्शनं चेत् तदार्थवादो गृहीतव्यः ॥११८॥
विध्यैक-वाक्यता स्यात् विना पदत्वं नचार्थ-वादस्य ।
तस्माद्वाक्यस्यार्थो न भवति लक्ष्यः कदाचिदपि ॥११९॥
इदमेव हि वैशिष्ट्यं समुपादायात्र नो लक्ष्यम् ।
विज्ञेयं प्रतिपादितमथ नोऽस्वीकृत्य लक्ष्यार्थम् ॥१२०॥
काव्ये क्वचिन्निषेधे प्रभवति वाच्ये, प्रतीयमानोऽन्यः ।
प्रभवति विधिस्वरूपः तस्मादपि नो द्वयोरैक्यम् ॥१२१॥

और प्रतीयमान दो ही अर्थों की चर्चा ध्वनिकार ने की है। अथवा पूर्ण काव्य-वाक्य को ही प्रतिपादक मानकर लक्ष्य अर्थ का उल्लेख नहीं किया है।११६।

लक्षक-वाक्य वाक्य न रहकर पदभाव को तुरन्त प्राप्त कर जाता है। इसका दृष्टान्त अपेक्षित हो तो अर्थवाद-वाक्य को लिया जा सकता है।११८। अर्थवाद वाक्य यदि पदभाव को प्राप्त न करे तो विधिवाक्य के साथ उसकी एकवाक्यता ही न हो पाये।११९। इसी विशेषता को ध्यान में रखकर वाच्य और प्रतीयमान दो ही प्रकार के अर्थ बतलाये गये हैं। ऐसा नहीं की पदार्थ रूप में भी लक्ष्य को न मानते हुए यह कहा है कि अर्थ दो प्रकार के हैं वाच्य और प्रतीयमान।१२०।

किसी काव्य में वाच्य अर्थ के निषेध स्वरूप होने पर भी प्रतीयमान अर्थ उससे अन्य विधिस्वरूप होता हुआ पाया जाता है। इसलिए भी वाच्य अर्थ और व्यंग्य अर्थ दोनों को एक नहीं कहा जा सकता है।१२१।

एतस्मादपि हेतो र्ध्वनेर्विभेदोऽन्यतो मान्यः ।
काव्यान्नन्वव्यङ्ग्यादपकृष्टव्यङ्ग्यतो वाऽपि ॥१२२॥
एतदुदाहरणतया प्रोक्तमिदं ध्वनिकृता पद्यम् ।
यद्वीक्ष्य ध्वनिकाव्यगमन्यत्वं सर्वथा स्पष्टम् ॥१२३॥
श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय ।
मा पथिक राज्यन्धक शय्यायामावयो र्मा क्षीः ॥१२४॥
शय्यापतननिषेधो वाच्यस्त्वर्थोऽत्र सुस्पष्टः ।
शय्ययां शयनीयं मम निश्शंकं विधिर्ह्यसौ व्यङ्ग्यः ॥१२५॥
एतस्मादपि हेतो र्नो वाच्यव्यंग्योयोरैक्यम् ।
तत्तत्प्राधान्यकृतो भेदो ध्वन्यन्ययो र्मान्यः ॥१२६॥

इन उक्त हेतुओं से भी व्यंग्य अर्थ रहित एवं निकृष्ट व्यंग्य-युक्त काव्यों से उन ध्वनिकाव्यों को जहाँ उत्कृष्ट व्यंग्य अर्थ प्रतीत होते हैं अतिरिक्त उत्तम काव्य मानना चाहिये ।१२२। उदाहरण के द्वारा इस वस्तुस्थितियो को समझाने के लिये ध्वनिकार ने यह काव्य उपस्थित किया है । जिसे देखते हुए ध्वनिकाव्य एक विशिष्ट काव्य हैं यह स्पष्ट हो उठता है ।१२३। काव्य-वाक्य यह है कि "सास यहाँ सोती है और में यहाँ । ओ रतौंधी-रोगयुक्त पथिक ! दिन में ही देख लो, कहीं ऐसा न हो कि हम दोनों की शय्या पर तुम लुढ़क पड़ो ।१२४। इस काव्यवाक्य में शय्या पर लुढ़क पड़ने का निषेध वाच्य अर्थ है यह स्पष्ट है और मेरी शय्या पर निश्शंक भाव से तुम सोना" यह सोने का निमन्त्रणात्मक विधान है व्यंग्य अर्थ ।१२५। इसलिये भी वाच्य अर्थ और व्यंग्य अर्थ की पारस्परिक अन्यता, और तदनुसार कहीं वाच्य अर्थ की प्रधानता तो कहीं व्यंग्य अर्थ की प्रधानता इसके आधार पर गुणीभूत-व्यंग्यकाव्यों तथा चित्रकाव्यों से ध्वनिकाव्य की अन्यता अवश्य मान्य है ।१२६।

वाच्ये विधा वनुभय-स्वरूपता मादधानोपि ।
भवति प्रतीयमानः काव्ये क्वचिदित्यपि प्रोक्तम् ॥१२७॥
व्रज ममैवैकस्याः भवन्तु निःश्वास—रोदितव्यानि ।
मा तवापि तया विना दाक्षिण्यहतस्य जनिषत ॥१२८॥
इदमेवोदाहरणं समुपन्यस्तं प्रबोधाय ।
व्रज तस्यामासक्त स्त्वमिति विधि र्वाच्यभूतोऽत्र ॥१२९॥
अवधारितं शठत्वं स्थित्येह कृतं तवेदानीम् ।
व्यंग्यं त्विति तर्जनमिह न विधिप्रतिषेधरूपं यत् ॥१३०॥
प्रतिषेधेऽपि च वाच्ये ह्यनुभयरूपः क्वचिद् व्यंग्यः ।
प्रभवति, सोदाहरणं ध्वनिकृद्भिरिति स्फुटं विहितम् ॥१३१॥

किसी काव्यस्थल में वाच्य अर्थ तो विधि स्वरूप होता है परन्तु प्रतीयमान अर्थ न तो विधि-स्वरूप होता है और न निषेध-स्वरूप । अतः वह प्रतीयमान अर्थ विधि और निषेध एतदनुभयात्मक होता है इसका भी उदाहरण ध्वनिकार ने दिया है ।१२७। उदाहरणात्मक काव्य वाक्य यह है कि "जाओ, विरह के कारण हिचकते हुए रोने आदि के कष्ट, केवल मुझे ही हों उस (नायिका) के विना तेरे जैसे दक्षिण नायक को वे कष्ट न हों" ।१२८। प्रतीयमान अर्थ कहीं विधि और निषेध दोनों से अतिरिक्त होता है इसका उदाहरण ध्वनिकार ने यही दिया है उसी तरह ध्वनि को समझने के लिये । इस उदाहरण वाक्यस्थल में वाच्य अर्थ यह है कि "उसमें ओ अत्यन्त आसक्त ! तू जाओ उसी के पास" इत्यादि ।१२९। और व्यंग्य अर्थ है यह कि "तेरी शठता मुझे अच्छी तरह मालूम हो गई, अब यहाँ तेरा रहना व्यर्थ है इस प्रकार उस नायक का तर्जन" जो कि न तो विधानात्मक है और न निषेधात्मक ।१३०। वाच्य अर्थ तो निषेधात्मक है किन्तु प्रतीयमान अर्थात् व्यंग्य अर्थ इसी काव्यस्थल में न तो प्रतिषेधात्मक और न विधेयात्मक, किन्तु तदुभयानात्मक, इसका भी स्पष्ट उदाहरण ध्वनिकार ने उपस्थित किया है ।१३१। वह उदाहरण

प्रार्थये तावत्प्रसीद निवर्त्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ॥१३२॥
इह गमनप्रतिषेधो वाच्योऽर्थो ज्ञायते स्पष्टम् ।
दयितोपश्लोकनकं प्रतीयमानं द्वयो र्भिन्नम् ॥१३३॥
वाच्योऽर्थो यद्विषयः तदितरविषयो भवन् व्यंग्यः ।
कथमथ जह्याद् भेदं ततः, ततो नो द्वयोरैक्यम् ॥१३४॥
इत्यपि सोदाहरणं प्रोक्तं संक्षेपमाचरता ।
पद्यमुदाहरणत्वेनेद मुपन्यस्तमतिललितम् ॥१३५॥
कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमर–पद्माघ्रायिणि ! वारितवामे ! सहस्वेदानीम् ॥१३६॥

वाक्य इस तरह का हो सकता है कि "मैं प्रार्थना करती हूँ। ओ अपने मुखचन्द्र के प्रकाश से अन्धकार को बिलकुल हटा डालनेवाली ! मुझ पर प्रसन्न होकर मेरी बात मान जाओ, अब भी लौट जाओ। ओ अपनी आशा पर स्वयं पानी फेरनेवाली ! अन्य अभिसारिकाओं के लिये भी तुम विघ्न उपस्थित कर रही हो ? ।१३२।

इस उदाहरण में गमन का निषेध वाच्य अर्थ है यह स्पष्ट रूप से ज्ञात हो रहा है और सम्बोध्य नायिका के मुखसौन्दर्यगत अतिशय, व्यंग्य-अर्थ रूप में प्रतीत हो रहा है, जोकि न तो विधानात्मक हैं और न निषेधात्मक, अतः दोनों से भिन्न है ।१३३। किसी काव्यस्थल में वाच्य अर्थ जिसको विषय बनाता हुआ प्रतीत होता है व्यंग्य अर्थ उससे अलग किसी और को ही विषय बनाता हुआ पाया जाता है। ऐसी परिस्थिति में वाच्य और व्यंग्य अर्थ पारस्परिक भिन्नता को कैसे छोड़ सकते ? अतः उक्त दोनों की एकता सम्भव नहीं ।१३४। संक्षिप्त रूप में इसका भी ललित उदाहरण ध्वनिकार ने उपस्थित किया है ।१३५। उदाहरण वाक्य इस प्रकार ज्ञातव्य है कि "अपनी प्रिया के खण्डित होठ को देखकर भला किस पति को कष्ट नहीं हो सकता ? ओ बारम्बार मेरे निवारण करने पर भी भ्रमरयुक्त फूल को

वाच्यार्थ-प्रतिपाद्या प्रभवति पत्नी पतिर्नैव ।
व्यंग्यस्य प्रतिपाद्यो दूत्याः, पतिरेव नो पत्नी ॥१३७॥
इत्येवं पद्येऽस्मिन् भेदो विषयस्य सुस्पष्टः ।
तस्मादपि नो व्यंग्यो वाच्यार्थान्तर्गतः प्रभवेत् ॥१३८॥
दिङ्मात्रं दर्शितमिह यदुक्तमेतत् ध्वनेः कर्त्रा ।
हेतूनामन्येषामपि वेद्यः संग्रहस्तस्मात् ॥१३९॥
बोद्धृ-स्वरूप-संख्या-निमित्त-कार्य-प्रतीति-कालानाम् ।
आश्रय-विषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यंग्यः ॥१४०॥

सूंघने वाली ! अब तू फल भोग ।" यहाँ वाच्य रूप में प्रतिपाद्य अर्थात् सम्बोध्य नायिका ही होती है नायक नहीं, किन्तु व्यंग्य रूप में कहनेवाली दूती के लिये प्रतिपाद्य अर्थात् सम्बोध्य नायक होता है नायिका नहीं, क्योंकि कहनेवाली व्यंजना से नायक को यह बतला रही है कि "तेरी अधरदंशन की धारणा गलत है । वह अधरदंशन मानवकर्तृक नहीं, भ्रमरकीट-कर्तृक है । अतः प्रतिपाद्य नायक होता है नायिका नहीं ।१३७। इस प्रकार इस उदाहरणभूत काव्यस्थल में प्रतिपाद्य-भूत वाच्य और व्यंग्य अर्थ में होनेवाला भेद स्पष्ट जाना जाता है । इस-लिये व्यंग्य अर्थ को वाच्य अर्थों के ही अन्तर्गत नहीं माना जा सकता ।१३८।प्रकृत में ध्वनिकार ने जितना कहा है उसी के अनुसार यहाँ दिग्दर्शन कराया गया है । अतः यहाँ उक्त हेतुओं को उपलक्षण समझते हुए प्रकृत के उपयोगी अन्य हेतु का भी संग्रह ज्ञातव्य है । सारांश यह कि (१) बोद्धा (२) स्वरूप (३) संख्या (४) निमित्त (५) कार्य (६) प्रतीति (७) काल (८) आश्रय (९) विषय आदि ऐसी वस्तुओं की कमी नहीं है जिनके भेद-प्रयुक्त व्यंग्य अर्थ को अभिधेय अर्थ से भिन्न समझा जाय ।

यहाँ बोद्धृभेद को उपलक्षण समझना चाहिये । अतः वक्तृभेद-प्रयुक्त भी वाच्यार्थ और व्यंग्यार्थ को आपस में भिन्न मानना आवश्यक है । जहाँ कोई प्रतिष्ठित सत्य बोलनेवाली स्त्री पड़ोसिन से कहती है कि "जरा मेरे घर की ओर भी ध्यान रखना, मैं मीठा पानी लाने दूर

व्यंग्यं वस्तु न केवलमस्ति विभिन्नं स्फुटाद्वाच्यात् ।
शब्दार्थालंकारावपि वाच्याद् भिन्नतावन्तौ ॥१४१॥

जा रही हूँ" तो वाच्यार्थ मात्र का बोध होकर रह जाता है, किन्तु यदि कोई दुश्चरित्र स्त्री कहती है तो "यह बहाना बना रही है पर-पुरुष के पास जा रही है" यह व्यंग्य अर्थ भी समझा जाता है। यह है वक्तृभेद का उदाहरण। (२) यदि कोई युवती सच्चे हृदय से सच्चे हृदयवाली अपने उपकार में रत सखी से यह कहती है कि "उस मेरे प्रिय को अनुकूल बनाने हेतु तुम बहुत कष्ट सह रही हो। क्या कहना है, तुम मुझपर होनेवाले सद्भाव के अनुरूप ही कर रही हो" तो इस वाक्य के वाच्य-अर्थ का ही बोध होता है किन्तु जिसे उक्त वाक्य कहा जा रहा है वह यदि आचरण की बुरी होती है तो व्यंग्यार्थ बोध भी श्रोताओं को होता है। जिसे कहा जा रहा है उसने कहनेवाली को दगा दिया है। दूती के स्थान में स्वयं सम्भोग कर आई है, उसी का उलहना पा रही है" यह है बोद्धृभेद का उदाहरण। स्वरूप भेद के उदाहरण उपस्थित किये जा चुके हैं। जहाँ वाच्यार्थ है विधि तो व्यंग्यार्थ है निषेध या उदासीन, अथवा जहाँ वाच्य है निषेध तो व्यंग्यार्थ है विधि या उदासीन। (३) संख्याभेद का उदाहरण इस प्रकार ज्ञातव्य है कि 'सूर्य अस्ताचल चला गया है" इस वाक्य का वाच्य अर्थ एक ही होता है, किन्तु श्रोताओं की विभिन्न हार्दिक परि-स्थिति के अनुसार व्यंग्य अगणित होते हैं। जैसे चरवाहों के लिये यह कि "अब गाएँ घर ले चलो"। पथिकों के लिये, अब जोर से चलना चाहिये। अभिसारिकाओं के लिये, अब अभिसार हेतु प्रस्तुत हो जाना चाहिये", तपस्वी ब्राह्मणों के लिये, अब "सन्ध्या-वन्दन आदि का अनुष्ठान करना चाहिये इत्यादि रूप में व्यंग्य अर्थ असंख्य होते हैं। (४) वाच्य अर्थ का बोध जहाँ शक्ति-ज्ञान सहित वाक्य-श्रवण मात्र से होना है, व्यंग्य अर्थ-बोध के लिये तदतिरिक्त प्रतिभा-नैर्मल्यात्मक सहृदयता की भी आवश्यकता होती है। अतः निमित्त भेद है। (५) कार्यभेद इसलिये होता है कि कहीं वाच्य अर्थ की प्रतीति मात्र होती हैं और कहीं व्यंग्य अर्थ की प्रतीति के अतिरिक्त हृदय में

रस-भाव-तदाभासाद्या अपि वाच्यार्थ-सामर्थ्यात् ।
आक्षेपं भजमाना एव हि यस्मात् प्रकाशन्ते ॥१४२॥
अभिधाव्यापारस्याविषयास्ते वाच्यतावन्तः ।
स्युः कथमथ ते, तस्माद् वाच्यार्थाद् भेदवन्तो हि ॥१४३॥
वाच्यत्वं व्यंग्यानां निजशब्दाऽऽवेदितत्वेन ।
नैव हि वक्तुं शक्यं काव्ये रसवाचकाभावात् ॥१४४॥
सत्यपि रसपदयोगे क्वचित् कदाचित्, प्रतीतिर्नो ।
रसभावादेःप्रभवति चामत्कृतिकी पदात्तस्मात् ॥१४५॥

चमत्कार भी होता है। (६) प्रतीति भेद के उदाहरण सभी ध्वनि-काव्य हैं। (७) वाच्य अर्थ का और व्यंग्य अर्थ का दोनों बोध एक ही समय नहीं होते हैं किन्तु उसके विपरीत, वाच्य अर्थ का बोध पहले और व्यंग्य अर्थ का बोध पीछे होता है अतः कालभेद होता है। (८) अभिधा केवल पदाश्रित होती है अतः वाच्य अर्थ पद मात्राश्रित होता है किन्तु व्यञ्जना पद, पदांश वर्ण, संघटना आदि में भी आश्रित होती है अतः व्यंग्य अर्थ पदमात्राश्रित होता नहीं, अतः आश्रयभेद होता है। विषयभेद का उदाहरण "कस्य वा न भवति रोषो" इत्यादि काव्य द्वारा ध्वनिकार ने भी उपस्थित किया है तथा यहाँ भी पहले बतलाया जा चुका है।

इस प्रकार वाच्यभूत वस्तु और व्यंग्यभूत वस्तुओं में ही केवल भेद नहीं है, ऐसे शब्दालङ्कार और अर्थालङ्कार भी प्रचुर मात्रा में प्राप्त हैं जो वाच्य न होकर जगह-जगह पर व्यंग्य होते हैं।१४१। इसी प्रकार रस भाव रसाभास, भावाभास आदि भी यतः वाच्य अर्थ के सामर्थ्य से अव्यवहित रूप में ही प्रकाशित होते हैं।१४२। अतः वे अभिधा व्यापार के विषय न हो पाने के कारण वाच्य अर्थ कैसे हो सकते ? इसलिये वे नियमतः व्यंग्य ही हुआ करते हैं वाच्य कभी होते नहीं।१४३। यह इसलिये अति आवश्यक है कि उन रस रसाभास भाव भावाभास को अपने वाचकभूत रस-शब्द या शृङ्गार वीर करुण आदि शब्दों से आवेदित न होने के कारण वाच्य तो कहा नहीं जा सकता। क्योंकि

मीनवती नयनाभ्यां चरणाभ्यामपि प्रफुल्ल-कमलवती ।
शैवालिनी च केशैः सुरसेयं सुन्दरी सरसी ॥१४६॥
इत्यादौ रस-शब्दो विशेष-युक्तान्, विभावादीन् ।
प्रतिपादयन् चमत्कृतिमाधत्ते नान्यथैवाऽथ ॥१४७॥
सति रसशब्दे तस्मात् प्रभवेत् किं नो रसास्वादः ।
एवं प्रश्ने जाते प्रोत्तर मिदमत्र विज्ञेयम् ॥१४८॥
बोधं शाब्दं केवलमाजनयन् तादृशः शब्दः ।
अनुवादकतां धत्ते रसप्रतीति र्विभावादेः ॥१४९॥

अधिकतर सरस काव्यों में रस, शृङ्गार आदि शब्द रहते नहीं ।१४४। किसी सरस काव्य-शरीर में "रस" पद का प्रयोग होने पर भी उस सरस काव्य से सहृदयों को होनेवाला चामत्कृतिक रसास्वाद उस सरस काव्य में आये हुए "रस" शृङ्गार आदि शब्द-प्रयुक्त होता नहीं ।१४५।

"यह सुन्दरी सचमुच एक सुन्दर-रस-वाली सरसी है। क्योंकि यह नयनात्मक मीन को धारण किये हुए हैं तो चरणात्मक प्रफुल्ल कमल को भी धारण किये है। इतना ही नहीं केशात्मक शैवाल भी इसमें देखा जा रहा है" ।१४६। इत्यादि काव्य वाक्यों के अन्दर आनेवाले रस आदि शब्द विशेषता - युक्त विभाव, अनुभाव और संचारीभाव तीनों को, या दो को, या एक को उपस्थित करके उनके माध्यम से ही चमत्कृति का आधान करते हैं, सहृदयों को रसास्वाद पहुँचाते हैं अन्यथा नहीं ।१४७। यदि यह प्रश्न उपस्थित किया जाय कि उक्त प्रकार "रस"-पदयुक्त सरस-काव्यस्थलों में जब उसके अन्दर रस का वाचक "रस" शब्द रहता ही है तो क्यों नहीं वहाँ होनेवाले रसास्वाद को उसी "रस" पद के प्रयोग का फल माना जाय ! तो उसका उत्तर यह ज्ञातव्य है ।१४८। उक्त प्रकार काव्य-घटक रस आदि शब्द जो कि वाच्य अर्थ के रूप में काव्यार्थ-बोध का सम्पादक होता है सहृदयों द्वारा आस्वाद्य रस अर्थ में, अनुवादात्मक हो जाता है ।१४९।

